श्रीश्रीमन्मध्वाचार्यकृत-
सर्वमूलग्रन्थानां संक्षिप्त-

# सारांशवर्णनम्

द्वैतवेदान्तविदुषा वेदान्तवाचस्पतिना
पण्डितवर-श्रीअदमार-विट्ठलाचार्येण संगृहीतम्

श्रीमाध्वगौड़ीय-सम्प्रदायैक-संरक्षक-
परमहंस परिव्राजकाचार्य अष्टोत्तरशतश्री ॐ विष्णुपाद
श्रीमद्भक्तिसिद्धान्तसरस्वतीगोस्वामि-
महाराज-सम्पादितम्




कलिकाता-नगर्यां १म संख्यक उल्टाडिङ्गि जंसन रोडस्थित
श्रीगौड़ीयमठतः
सामयिकपत्र-गौड़ीय-सम्पादकेन बि, ए, इत्युपाधिक-
श्रीसुन्दरानन्द-विद्याविनोदेन प्रकाशितम्

प्रथम-संस्करणम् ] [ भैक्ष्यमानकत्रयम्

कलिकाता-नगर्य्यां २४३।२ संख्यक अपार सार्किउलार रोड्स्थित गौड़ीय प्रिण्टिं ओयार्क् साख्य वैद्युतिक-मुद्रायन्त्रे श्रीअनन्तवासुदेव-ब्रह्मचारिणा मुद्रितम्

# सूचीपत्रम्

इति सूचीपत्रं समाप्तम्

---

श्रीमन्मध्वाचार्यकृत

# सर्वमूलग्रन्थानां संक्षिप्त

# सारांशवर्णनम्

## १ । श्रीमद्भगवद्गीताभाष्यम्

प्रथमतः सर्ववेदार्थपरिबृंहितत्वं महाभारतस्य प्रतिपाद्यते। भगवता वेदव्यासेन सर्ववेदेष्वप्यविद्यमानाः केवलस्वात्मद्रष्टा एवार्थाः स्त्रीशूद्रादिवेदानधिकारि सर्वपुरुषयोग्याः विस्तरेणात्र विवृताः। अतो भारतस्य वेदोत्तम महाशास्त्रत्वं तन्मध्ये श्रीभगवद्गीता विष्णुसहस्रनामस्तोत्रे महासारभूते। इत्यादिक्रमेण भारतगीतयोर्माहात्म्यं विशेषतः प्रतिपाद्यते। प्रथमाध्यायषट्के भगवदपरोक्षज्ञानसाधनं स्ववर्णाश्रमविहितं सर्वकर्म निष्कामपूर्वं अवश्यकार्यमित्येव कृष्णस्य तात्पर्यमित्यत्र बहूनि प्रमाणानि कथ्यन्ते। द्वितीयषट्के भगवन्माहात्म्यं नानाविधविभूति प्रदर्शनमुखेन प्रतिपाद्यते। तृतीयषट्के भगवदुपासनाविरोधि वस्तु-

स्वभावधर्माणां विवरणपूर्वकं भगवद्भक्तेरवश्यकार्यत्वं मोक्षान्तरङ्गसाधनत्वञ्च स्फुटं प्रतिपादितम्। मुख्यतः गीतायास्तात्पर्यं विवरणं कृत्वा स्वोक्तार्थे बहूनि प्रमाणानि सविस्तरं प्रतिपादितानि।

## २। श्रीमद्ब्रह्मसूत्रभाष्यम्

अत्र श्रीवेदव्यासस्य साक्षाद्भगवदवतारत्वं, सर्ववेद-विभागेकारणं, ब्रह्मसूत्राणां सर्ववेदार्थनिर्णयरूपत्वञ्च प्रतिपादितम्। समन्वयः अविरोध साधन फलरूपाध्याय चतुष्टयमध्ये प्रथमे समन्वयाध्याये अन्यत्र प्रसिद्धादि नामलिङ्गात्मकसर्वशब्दानां ब्रह्मणि परम-मुख्यवृत्त्या विद्वद्रूढ्याच ब्रह्मवाचकत्वं प्रतिपाद्यते। प्रसङ्गाद्देवानां वेदविद्याधिकारः शूद्राणामनधिकारश्च समर्थितः। द्वितीये अध्याये युक्तिसमय श्रुतिन्यायोपेत-श्रुतिरूपविरोधचतुष्टय परिहारः क्रियते। तृतीये वैराग्य-भक्ति-उपासनाज्ञानरूप पादचतुष्टयेन मोक्षान्तरङ्गसाधनान्युक्त्वा अपरोक्षज्ञानस्य सर्वपापादि परिहारकत्वरूपं माहात्म्यमुच्यते। चतुर्थे कर्मनाश उत्क्रान्ति मार्ग-भोगरूप पादचतुष्टयेन। अप्रारब्धसर्वकर्मनाशः देहात् ज्ञानिनः उत्क्रान्तिक्रमः अर्चिरादिमार्गेण मोक्षप्रकारः



मोक्षे चातुर्विध्यकथनपूर्वकं भोगविस्तरश्च प्रतिपाद्यते। मध्वाचार्यस्य वायुरूपत्वं चान्ते प्रतिपादितम्। एवं च सूत्रप्रस्थाने स्वसिद्धान्तस्य सप्रमाणं स्फुटं विवरणं प्रसङ्गात्किञ्चिदेवपरखण्डनमत्र कृतम्।

## ३। अनुभाष्यम्

चतुरध्यायात्मक ब्रह्मसूत्राणां प्रत्यधिकरण तात्पर्यं अति संक्षेपतो लिखितम् प्रत्यहं मध्वाचार्य पूर्व-सन्न्यासगुरुरच्युतप्रेक्षाचार्यः ब्रह्मसूत्रभाष्यपठनं विना भगवत्प्रसादं न स्वीकरोति स्म। कदाचित् कलामात्र-द्वादश्यां सूर्योदये पालने कर्त्तव्ये सति सूत्रभाष्यपठनं विना प्रसादसेवने व्यथित आसीत्। तदा मध्वाचार्यः ब्रह्ममीमांसा सारं "अणुभाष्य" विधाय गुरवे पठितुमदात्। तत्पठित्वा प्रसादं द्वादश्यामेव स्वीचक्रुरिति किंवदन्ती।

## ४। अनुव्याख्यानम्

मध्वशास्त्रविरुद्ध परशास्त्राणां श्रुतिस्मृति प्रति-पाद्याभिर्लौकिकाभिश्चयुक्तिभिर्निषेधकं ग्रन्थान्तरमवश्यं कार्यमिति प्रियशिष्येण त्रिविक्रमाचार्येण सम्प्रार्थितो

मध्वाचार्यः "अनुव्याख्यानं" विरचयामास। अत्र प्रथमतः ब्रह्मसूत्राणां प्रामाण्यं समर्थ्यते। ततो बन्धस्य यथार्थत्वं मिथ्यात्वनिराकरणम्। आरोपवादिनां अन्यथाख्यातिवादिनां मतविवरणपूर्वकं खण्डनम्। वेदानां कार्यपरत्ववादिनां मीमांसकानां खण्डनम्। चार्वाक बुद्धादीनां आप्तत्वानिश्चयेन तच्छास्त्रस्य त्याज्यत्वम्। ब्रह्मसूत्राणां परोक्तार्थेषु दोषोद्भावनपूर्वकं खण्डनम्। प्रथमाध्याय चतुर्थपादस्य सांख्यमतनिरासकत्ववादिनां मतानां सविस्तरं खण्डनम्। द्वितीयाध्यायस्य प्रथमपादे परोदारितप्रमाणप्रक्रिया खण्डनम्। वेदप्रामाण्य समर्थनम्। द्वितीयपादे सांख्यादि सर्वविरोधिमतानां विस्तरेण खण्डनम्। तृतीयाध्याये विशेषतः मायावादिमतनिराकरणम्। श्रौतविष्णुधर्म्माणां सत्यत्वस्थापनम्। साक्षिप्रत्यक्षस्य प्रबलप्रमाणत्वस्थापनम्। अभेदप्रतिपादकतया परोदारितसर्वश्रुतीनां अनुपपत्तिप्रतिपादनपूर्वकं भेदपरत्वस्थापनम्। ब्रह्मादिदेवानां तारतम्यकथनपूर्वकं तदीयसाधनतारतम्यनिरूपणम्। तेषां भगवदपरोक्षज्ञानेषु विशेषकथनम्। कर्म्मादि साधनपरम्पराक्रमः। द्वेषस्य विरोधित्वस्थापनम्। शास्त्रप्रवचनफलस्योत्तरोत्तर-



माधिक्यकथनम्। चतुर्थे अध्याये उपासनाक्रमः। देवानां सृज्यानां स्रष्टृषु लयकथनम्। मनुष्याणां अर्चिरादिमार्गनिरूपनम्। अन्यमतोक्तानां मोक्षक्रमरूपाणां सविस्तरं निराकरणम्। मोक्षे सायुज्य-सारुप्य-सालोक्य-सामीप्यादि प्रकारचतुष्टयकथनपूर्वकमानन्द-तारतम्यकथनं अनेक प्रमाणैस्तस्यसाधनञ्च। मुक्तानां पुनरावृत्तिनिराकरणम्। ब्रह्मादिदेवानां मोक्षेतारतम्येनैवानन्द भोगकथनम्।

## ५। प्रमाणलक्षणम्

प्रत्यक्षानुमानागमरूप प्रमाणत्रयरूपकथनम्। प्रत्यक्षादीनां विभागपूर्वकं तदीय विषयनिरूपणम्। प्रत्यक्षादिप्रतिबन्धकदोषाणामुक्तिः। परोक्तप्रमाणव्यवस्थायाः संक्षेपतो निराकरणम्।

## ६। कथालक्षणम्

वाद जल्प वितण्डाख्य कथात्रय स्वरूपनिरूपणम्। तदधिकारिनिरूपणञ्च प्राश्निकस्वरूपविचारः। प्राश्निकाभावे कथाकरणदोषः। पराजय जयनिर्णयप्रकारः। निग्रहस्थान निरूपणम्।

## ७। उपाधिखण्डनम्

मायावादिना ब्रह्मणि प्रतिपादितस्याज्ञानादिरूपोपाधेः स्वरूप खण्डनम्। अज्ञानस्य ब्रह्मण्यसम्भवप्रतिपादनम्। भेदानामौपाधिकत्व निराकरणञ्च।

## ८। मायावादखण्डनम्

ऐक्यस्य ब्रह्मस्वरूपत्वास्वरूपत्वविकल्पनिराकरणपूर्वकं याथार्थ्यनिराकरणम्। अयथार्थभूतैक्य प्रतिपादकत्वेन अप्रामाण्यात् मायावादस्यास्वीकार्यता निरूपणम्।

## ९। प्रपञ्चमिथ्यात्वानुमानखण्डनम्

मायावादिभिः प्रपञ्चस्य मिथ्यात्वप्रतिपादनाय कथितानुमानानां संक्षेपतो दोषोद्भावनम्। अनुमानप्रक्रियायाः संक्षेपतः कथनम्।

## १०। तत्वसंख्यानम्

तत्वविभागः। चेतनानां विभागः। मुक्तचेतनविभागः। तमोयोग्यचेतनविभागः। नित्यवस्तुविभागः। अनित्य वस्तुविभागः। संसृष्टासंसृष्टविभागः। जीवेषु प्राप्तमोक्षाप्राप्तमोक्षविभागोक्तिः।

श्रीमन्मध्वाचार्यकृत

# सर्वमूलग्रन्थानां संक्षिप्त
# सारांशवर्णनम्

## १। श्रीमद्भगवद्गीताभाष्यम्

प्रथमतः सर्ववेदार्थपरिबृंहितत्वं महाभारतस्य प्रतिपाद्यते। भगवता वेदव्यासेन सर्ववेदेष्वप्यविद्यमानाः केवलस्वात्मदृष्टा एवार्थाः स्त्रीशूद्रादिवेदानधिकारि सर्वपुरुषयोग्याः विस्तरेणात्र विवृताः। अतो भारतस्य वेदोत्तम महाशास्त्रत्वं तन्मध्ये श्रीभगवद्गीता विष्णुसहस्रनामस्तोत्रे महासारभूते। इत्यादिक्रमेण भारतगीतयोर्माहात्म्यं विशेषतः प्रतिपाद्यते। प्रथमाध्यायषट्के भगवदपरोक्षज्ञानसाधनं स्ववर्णाश्रमविहितं सर्वकर्म निष्कामपूर्वं अवश्यकार्यमित्येव कृष्णस्य तात्पर्यमित्यत्र बहूनि प्रमाणानि कथ्यन्ते। द्वितीयषट्के भगवन्माहात्म्यं नानाविधविभूति प्रदर्शनमुखेन प्रतिपाद्यते। तृतीयषट्के भगवदुपासनाविरोधि वस्तु-

स्वभावधर्माणां विवरणपूर्वकं भगवद्भक्तेरवश्यकार्यत्वं मोक्षान्तरङ्गसाधनत्वञ्च स्फुटं प्रतिपादितम्। मुख्यतः गीतायास्तात्पर्यं विवरणं कृत्वा स्वोक्तार्थे बहूनि प्रमाणानि सविस्तरं प्रतिपादितानि।

## २। श्रीमद्ब्रह्मसूत्रभाष्यम्

अत्र श्रीवेदव्यासस्य साक्षाद्भगवदवतारत्वं, सर्ववेदविभागेकारणं, ब्रह्मसूत्राणां सर्ववेदार्थनिर्णयरूपत्वञ्च प्रतिपादितम्। समन्वयः अविरोध साधन फलरूपाध्याय चतुष्टयमध्ये प्रथमे समन्वयाध्याये अन्यत्र प्रसिद्धादि नामलिङ्गात्मकसर्वशब्दानां ब्रह्मणि परममुख्यवृत्त्या विद्वद्रूढ्याच ब्रह्मवाचकत्वं प्रतिपाद्यते। प्रसङ्गाद्देवानां वेदविद्याधिकारः शूद्राणामनधिकारश्च समर्थितः। द्वितीये अध्याये युक्तिसमय श्रुतिन्यायोपेतश्रुतिरूपविरोधचतुष्टय परिहारः क्रियते। तृतीये वैराग्यभक्ति-उपासनाज्ञानरूप पादचतुष्टयेन मोक्षान्तरङ्गसाधनान्युक्त्वा अपरोक्षज्ञानस्य सर्वपापादि परिहारकत्वरूपं माहात्म्यमुच्यते। चतुर्थे कर्म्मनाश उत्क्रान्ति मार्गभोगरूप पादचतुष्टयेन। अप्रारब्धसर्वकर्म्मनाशः देहात् ज्ञानिनः उत्क्रान्तिक्रमः अर्चिरादिमार्गेण मोक्षप्रकारः



मोक्षे चातुर्विध्यकथनपूर्वकं भोगविस्तरश्च प्रतिपाद्यते। मध्वाचार्यस्य वायुरूपत्वं चान्ते प्रतिपादितम्। एवं च सूत्रप्रस्थाने स्वसिद्धान्तस्य सप्रमाणं स्फुटं विवरणं प्रसङ्गात्किञ्चिद्दैवपरखण्डनमत्र कृतम्।

## ३। अनुभाष्यम्

चतुरध्यायात्मक ब्रह्मसूत्राणां प्रत्यधिकरण तात्पर्यं अति संक्षेपतो लिखितम्. प्रत्यहं मध्वाचार्य पूर्वसन्न्यासगुरुरच्युतप्रेक्षाचार्यः ब्रह्मसूत्रभाष्यपठनं विना भगवत्प्रसादं न स्वीकरोति स्म। कदाचित् कलामात्रद्वादश्यां सूर्योदये पालने कर्त्तव्ये सति सूत्रभाष्यपठनं विना प्रसादसेवने व्यथित आसीत्। तदा मध्वाचार्यः ब्रह्ममीमांसा सारं "अणुभाष्यं" विधाय गुरवे पठितुमदात्। तत्पठित्वा प्रसादं द्वादश्यामेव स्वीचक्रुरिति किंवदन्ती।

## ४। अनुव्याख्यानम्

मध्वशास्त्रविरुद्ध परशास्त्राणां श्रुतिस्मृति प्रतिपाद्याभिर्लौकिकाभिश्चयुक्तिभिर्निषेधकं ग्रन्थान्तरमवश्यं कार्यमिति प्रियशिष्येण त्रिविक्रमाचार्येण सम्प्रार्थितो

मध्वाचार्यः "अनुव्याख्यानं" विरचयामास। अत्र प्रथमतः ब्रह्मसूत्राणां प्रामाण्यं समर्थ्यते। ततो बन्धस्य यथार्थत्वं मिथ्यात्वनिराकरणम्। आरोपवादिनां अन्यथाख्यातिवादिनां मतविवरणपूर्वकं खण्डनम्। वेदानां कार्यपरत्ववादिनां मीमांसकानां खण्डनम्। चार्वाक बुद्धादीनां आप्तत्वानिश्चयेन तच्छास्त्रस्य त्याज्यत्वम्। ब्रह्मसूत्राणां परोक्तार्थेषु दोषोद्भावनपूर्वकं खण्डनम्। प्रथमाध्याय चतुर्थपादस्य सांख्यमतनिरासकत्ववादिनां मतानां सविस्तरं खण्डनम्। द्वितीयाध्यायस्य प्रथमपादे परोदारितप्रमाणप्रक्रिया खण्डनम्। वेदप्रामाण्य समर्थनम्। द्वितीयपादे सांख्यादि सर्वविरोधिमतानां विस्तरेण खण्डनम्। तृतीयाध्याये विशेषतः मायावादिमतनिराकरणम्। श्रौतविष्णुधर्म्माणां सत्यत्वस्थापनम्। साक्षिप्रत्यक्षस्य प्रबलप्रमाणत्वस्थापनम्। अभेदप्रतिपादकतया परोदारितसर्वश्रुतीनां अनुपपत्तिप्रतिपादनपूर्वकं भेदपरत्वस्थापनम्। ब्रह्मादिदेवानां तारतम्यकथनपूर्वकं तदीयसाधनतारतम्यनिरूपणम्। तेषां भगवदपरोक्षज्ञानेषु विशेषकथनम्। कर्म्मादि साधनपरम्पराक्रमः। द्वेषस्य विरोधित्वस्थापनम्। शास्त्रप्रवचनफलस्योत्तरोत्तर-



माधिक्यकथनम्। चतुर्थे अध्याये उपासनाक्रमः। देवानां सृज्यानां स्रष्टृषु लयकथनम्। मनुष्याणां अर्चिरादिमार्गनिरूपनम्। अन्यमतोक्तानां मोक्षक्रमरूपाणां सविस्तरं निराकरणम्। मोक्षे सायुज्य-सारुप्य-सालोक्य-सामीप्यादि प्रकारचतुष्टयकथनपूर्वकमानन्द-तारतम्यकथनं अनेक प्रमाणैस्तस्यसाधनञ्च। मुक्तानां पुनरावृत्तिनिराकरणम्। ब्रह्मादिदेवानां मोक्षेतारतम्येनैवानन्द भोगकथनम्।

## ५। प्रमाणलक्षणम्

प्रत्यक्षानुमानागमरूप प्रमाणत्रयरूपकथनम्। प्रत्यक्षादीनां विभागपूर्वकं तदीय विषयनिरूपणम्। प्रत्यक्षादिप्रतिबन्धकदोषाणामुक्तिः। परोक्तप्रमाणव्यवस्थायाः संक्षेपतो निराकरणम्।

## ६। कथालक्षणम्

वाद जल्प वितण्डाख्य कथात्रय स्वरूपनिरूपणम्। तदधिकारिनिरूपणञ्च प्राश्निकस्वरूपविचारः। प्राश्निकाभावे कथाकरणदोषः। पराजय जयनिर्णयप्रकारः। निग्रहस्थान निरूपणम्।

## ७। उपाधिखण्डनम्

मायावादिना ब्रह्मणि प्रतिपादितस्याज्ञानादिरूपोपाधेः स्वरूप खण्डनम्। अज्ञानस्य ब्रह्मण्यसम्भवप्रतिपादनम्। भेदानामौपाधिकत्व निराकरणञ्च।

## ८। मायावादखण्डनम्

ऐक्यस्य ब्रह्मस्वरूपत्वास्वरूपत्वविकल्पनिराकरणपूर्वकं याथार्थ्यनिराकरणम्। अयथार्थभूतैक्य प्रतिपादकत्वेन अप्रामाण्यात् मायावादस्यास्वीकार्यता निरूपणम्।

## ९। प्रपञ्चमिथ्यात्वानुमानखण्डनम्

मायावादिभिः प्रपञ्चस्य मिथ्यात्वप्रतिपादनाय कथितानुमानानां संक्षेपतो दोषोद्भावनम्। अनुमानप्रक्रियायाः संक्षेपतः कथनम्।

## १०। तत्वसंख्यानम्

तत्वविभागः। चेतनानां विभागः। मुक्तचेतनविभागः। तमोयोग्यचेतनविभागः। नित्यवस्तुविभागः। अनित्य वस्तुविभागः। संसृष्टासंसृष्टविभागः। जीवेषु प्राप्तमोक्षाप्राप्तमोक्षविभागोक्तिः।



## ११। तत्वविवेकः

तत्व संख्यानोक्तार्थानां प्रमाणरूपतया वेदव्यासोक्ततत्वविवेकग्रन्थस्थ श्लोकानामेवात्रोदाहरणम्। विषयस्तत्वसंख्यानोक्त एव।

## १२। तत्वोद्योतः

मायावादिप्रचण्डस्य पुण्डरीकपुरीनामकस्य मध्वाचार्यस्य च वादावसरे मध्वाचार्योक्तानां प्रमाणयुक्तीनामेव ग्रन्थरूपेण लेखनम्। अत्र मायावादिमतोक्त सर्व प्रमेयानां सयुक्तिकं निराकरणम्। विशेषतः भेदमिथ्यात्वं जगन्मिथ्यात्वञ्च निराकृतम्। मायावादिनां दैत्यराक्षसजातीयत्वे प्रमाणोक्तिः। बौद्धमायावादिनोः साम्य प्रतिपादनम्। मध्वाचार्यशिष्यकृताः मायावादिनां अपहासोक्तयश्च।

## १३। कर्मनिर्णयः

वेदेषु कर्म्मपरतया प्रसिद्धानां भागानां भगवत्स्वरूप परत्वनिरूपणम्। एवं दुर्घटार्थानां वेदभागानां अर्थविवरणपूर्वकं तेषां विष्णौ महातात्पर्यकथनम्। एवं निष्कामं कृतानां कर्म्मणां भगवद्ज्ञानसाधनत्वकथन-

# ११ । तत्वविवेकः

तत्व संख्यानोक्तार्थानां प्रमाणरूपतया वेदव्यासोक्त-तत्वविवेकग्रन्थस्थ श्लोकानामेवात्रोदाहरणम् । विषय-स्तत्वसंख्यानोक्त एव ।

# १२ । तत्वोद्योतः

मायावादिप्रचण्डस्य पुण्डरीकपुरीनामकस्य मध्वा-चार्यस्य च वादावसरे मध्वाचार्योक्तानां प्रमाणयुक्ती-नामेव ग्रन्थरूपेण लेखनम् । अत्र मायावादिमतोक्त सर्व प्रमेयानां सयुक्तिकं निराकरणम् । विशेषतः भेद-मिथ्यात्वं जगन्मिथ्यात्वञ्च निराकृतम् । मायावादिनां दैत्यराक्षसजातीयत्वे प्रमाणोक्तिः । बौद्धमायावादिनोः साम्य प्रतिपादनम् । मध्वाचार्यशिष्यकृताः माया-वादिनां अपहासोक्तयश्च ।

# १३ । कर्मनिर्णयः

वेदेषु कर्म्मपरतया प्रसिद्धानां भागानां भगवत्स्वरूप परत्वनिरूपणम् । एवं दुर्घटार्थानां वेदभागानां अर्थविवरणपूर्वकं तेषां विष्णो महातात्पर्यकथनम् । एवं निष्कामं कृतानां कर्म्मणां भगवद्ज्ञानसाधनत्वकथन-



पूर्वकं तेषामवश्यकार्यत्व प्रतिपादनम् । एवं मेघगर्जित गर्गरस्वरादि सर्वध्वनीनां भगवत्स्वरूपपरत्व कथनम् ।

# १४ । श्रीमद्विष्णुतत्वविनिर्णयः

अत्र प्रथमतः विष्णोः सदागममात्रवेद्यत्वं प्रति-पाद्यते । ऋगादिवेदानां मूलरामायण भारतसात्विक-पुराण पञ्चरात्राणां सदागमत्वम् । एतद्विरूद्धानां दूरागमत्वञ्च । ततो वेदस्यापौरुषेयत्वसमर्थनम् । वर्णानां नित्यत्वसमर्थनम् । पुराणानां कल्पे कल्पे क्रमभेदेनानित्यक्रमवत्वात्पौरुषेयत्वनिरूपणम् । वेदानां कार्यपरत्वेनैब प्रामाण्यवादिनां मीमांसकनां मत निरा-करणम् । दिशांस्वाभाविकत्वनिरूपणम् । प्रत्यक्षानु-मानागमनिरूपणपूर्वकं तेषां स्वरूपविभागः । ब्रह्मादि-सर्वजीवानां प्रत्यक्षादि स्वरूपविवरणम् । वेदानां भेदपरत्वसमर्थनम् । अनुवादकत्वेपि अतत्वावेद-कत्व निराकरणम् । जीवेश्वरादि भेदविषये परोदारित दोषाणां परिहारः । बहुतरप्रमाणकथनञ्च । वेदानां विष्णुसर्वोत्तमत्वपरत्वसमर्थनम् । छान्दोग्यषष्ठाध्यायोक्त नवकृत्वोपदेशानामभेदपरत्वे पूर्वोत्तरविरोधोद्भावनम् । नवदृष्टान्तानाञ्च भेदपरत्वसाधनम् । जगन्मिथ्यात्व-

पूर्वकं तेषामवश्यकार्यत्व प्रतिपादनम् । एवं मेघगर्जित गर्गरस्वरादि सर्वध्वनीनां भगवत्स्वरूपपरत्व कथनम् ।

## १४ । श्रीमद्विष्णुतत्वविनिर्णयः

अत्र प्रथमतः विष्णोः सदागममात्रवेद्यत्वं प्रति-पाद्यते । ऋगादिवेदानां मूलरामायण भारतसात्विक-पुराण पञ्चरात्राणां सदागमत्वम् । एतद्विरूद्धानां दूरागमत्वञ्च । ततो वेदस्यापौरुषेयत्वसमर्थनम् । वर्णानां नित्यत्वसमर्थनम् । पुराणानां कल्पे कल्पे क्रमभेदेनानित्यक्रमवत्वात्पौरुषेयत्वनिरूपणम् । वेदानां कार्यपरत्वेनैव प्रामाण्यवादिनां मीमांसकनां मत निरा-करणम् । दिशांस्वाभाविकत्वनिरूपणम् । प्रत्यक्षानु-मानागमनिरूपणपूर्वकं तेषां स्वरूपविभागः । ब्रह्मादि-सर्वजीवानां प्रत्यक्षादि स्वरूपविवरणम् । वेदानां भेदपरत्वसमर्थनम् । अनुवादकत्वेपि अतत्वावेद-कत्व निराकरणम् । जीवेश्वरादि भेदविषये परोदारित दोषाणां परिहारः । वहुतरप्रमाणकथनञ्च । वेदानां विष्णुसर्वोत्तमत्वपरत्वसमर्थनम् । छान्दोग्यषष्ठाध्यायोक्त नवकृत्वोपदेशानामभेदपरत्वे पूर्वोत्तरविरोधोद्भावनम् । नवदृष्टान्तानाञ्च भेदपरत्वसाधनम् । जगन्मिथ्यात्व-



परतया परोदाहृत श्रुतीनामर्थान्तरकथनपूर्वकं सत्य-त्वार्थपरत्वकथनम् । मायावादिषु एक जीववादि-नामनेकजीववादिनां मतविवरणपूर्वकं खण्डनम् । भेदविषये जगत्सत्यत्वविषये अनेकप्रमाणोक्तिः । द्वितीय परिच्छेदे विष्णुस्वरूप जीवस्वरूपयोर्विचारः । तृतीय परिच्छेदे विष्णोर्जन्माद्यभावप्रतिपादनम् । सर्वावताराणां मूलस्वरूपस्य सर्वसाम्याभेदकथनम् । दुःखाज्ञानादि निरासः । तदीय दास्येनैव सर्वेषां मोक्षोक्तिः ।

## १५ । ऋग्भाष्यम्

मायावादिनान्यथाव्याख्यातांशमात्रस्यैवापव्याख्या निरसनपूर्वकं भाष्यं कृतम् । आदितस्त्रयोऽध्यायाः मायिनादूषिताः । अत्रादौ वेदमन्त्रानां ऋष्यादिक्रम-वर्णनम् । भगवान् लक्ष्मीः चतुर्मुखादिक्रमेण वेदोप-देशकाः सर्वेऽपि ऋषिपदवाच्याः । अनुष्टुबुष्णिगादि छन्दांसि च देवानां भार्यारूपाः । मन्त्रेषु विष्णोर्बहु-रूपाणि पृथक्पृथगुदाहृतानि । सर्वाणि च वेद-मन्त्रादीनि अर्थत्रयवन्ति । वैदिक जपादिफलं योग्यता-तारतम्येन लभ्यते । तत्र देवा एवोत्तमाधिकारिणः । ततो ऋषयः, ततः पितरः, अतो राजानः, ततो मनुष्यो-

त्तमाः। अनधिकारिणाधीतश्चेदनर्थकारी भवति। भक्त्यादिपूर्वकं सर्वकर्म्माण्येव समाचरितानि विष्णुप्रीतिकराणि भवन्तीत्यादि।

## १६। ऐतरेय भाष्यम्

विशालनामकस्य चतुर्मुखपुत्रस्य पत्न्याः इतरा देव्यास्तपसा भगवान् विष्णुः महिदासनाम्नावततार। स किल चतुर्मुखयज्ञसभायां चतुर्मुखेनस्तुतः सन् रमायै इमामुपनिषदं जगादेति उपोद्घात आदावुक्तः। ततः ऐक्यपरतयापातप्रतीयमानानां श्रुतीनां भेदपरत्वस्थापनम्। एवं देवानां मध्ये यस्य यस्य यावन्तो भगवद्गुणाः उपासनार्हास्तेषां सविवरणमुक्तिः। ततः ऋष्यादीनां सर्वेषाञ्च उपास्य भगवद्गुणानां प्रपञ्चनम्। भगवद्विरोधिनां दैत्यादीनां स्वभावचेष्टादि निरूपणम्। मध्वाचार्यस्वरूपविवरणम्।

## १७। बृहदारण्यक भाष्यम्

अस्या उपनिषदः हयग्रीवः प्रथमर्षिः। ततो लक्ष्मी-चतुराननः-सूर्य-याज्ञवल्क्य-कण्वः एते क्रमेण-ऋषयः। प्रथमं अश्वमेधाख्यकर्म्मपरतया प्रतीयमानानां



ऋचां भगवत्स्वरूपपरत्वं प्रतिपादितम्। ततः परमैक्यवचनतया प्रतीतानां वाक्यानां सविस्तरं भेदपरत्व व्यवस्थापनम्। अभेदस्य सविचारं खण्डनञ्च। वादजल्पवितण्डादिकथासु जयपराजयादिनिर्णयप्रकारः। मध्वस्य वायुरूपत्वप्रतिपादनञ्च।

## १८। छान्दोग्य भाष्यम्

अत्र देवानां तारतम्यं विशेषेण कथ्यते। ॐकारस्य सर्ववेदोत्तमत्वं सर्ववेदमूलत्वं सर्वसारमन्त्रत्वं चोच्यते। जीवानां पापादिनाधमगतिः सुकृतेनोर्ध्वगतिः ब्रह्मज्ञानेनैवमोक्षगतिरिति च प्रतिपाद्यते। शूद्राणां वेदानधिकारः गुरुप्राप्तेः परमपुरुषार्थसाधनत्वञ्च चित्रतम्। एवं आदित्यमण्डले विद्यमानानां वासुदेव-सङ्कर्षण-प्रद्युम्नानिरुद्धरूपाणां वर्णाकारस्थानपदानां विशेषाः कथ्यन्ते। मधुविद्याधिकारिणां वस्वादीनां उपास्यरूपाणि आधिपत्यस्थानानि अवान्तररूपविशेषाश्च सविस्तरं प्रतिपादिताः। जीवब्रह्माभेदपराणां वाक्यानां उपपत्तिविरोधेन भेदपरत्व व्यवस्था च। देवेषु क्रमतारतम्यम्। योग्यायोग्ययोर्मध्ये योग्यस्यैव उपदेशार्हत्वम्। अयोग्योद्देश्येनोपदेशे महानिष्टप्राप्तिश्चोच्यते।

एवं वैकुण्ठादि विष्णुलोकमाहात्म्यं लक्ष्मीविलासश्च बहुधावर्ण्यन्ते। तत्र प्रविष्टानामपुनरावृत्तिश्च।

## १९। तैत्तिरीयोपनिषद्भाष्यम्

अत्र प्रथमं गुरुकार्यमाणोशिक्षाक्रमः। शिष्यं प्रत्याचार्यकार्योपदेशश्च। ततः परं वासुदेवादि पञ्चमूर्त्तौ नामध्यात्माधिदैवाधिभूताधिप्रजाख्य प्रकरणेषु अवस्थान व्यवस्था। अन्नमयादि पञ्चप्रकरणानां वासुदेवादि पञ्च-रूपपरत्वव्यवस्था। सामान्यतः प्रमाणस्वरूपविचारः। ब्रह्मज्ञानस्य मोक्षसाधनत्वम्। ब्रह्मलक्षणम्। तत्प्राप्ति प्रकारः। अधिकारिणामानन्द् तारतम्यविचारः। मोक्षे आनन्दभोगप्रकारः। तत्र मुक्तानां गायनादि लीला-वर्णनम्। मध्वाचार्यस्य स्वरूपविचारश्च।

## २०। ईशावास्योपनिषद्भाष्यम्

अत्र वेदविहितानि स्ववर्णाश्रमोचित नित्यनैमित्तिक-सर्वकर्म्माणि सर्वथा कर्त्तव्यानीति सप्रमाणं निग-दितम्। एवं भगवद्गुणानां चिन्तनं, दोषराहित्य-चिन्तनं, सृष्टिकर्त्तृत्व संहर्त्तृत्वादि चिन्तनं, ब्रह्मज्ञानं अन्यथाज्ञानि निन्दा च मोक्षहेतुरिति सोपपत्तिक-मुदाह्रियते।



## २१। काठकोपनिषद्भाष्यम्

अत्र नचिकेत सम्प्रति यमेनोक्तानां प्रश्नत्रयानां मध्ये पूर्वं पितृसौमनस्यं विहायावशिष्टप्रश्नद्वयस्य भगवत्-स्वरूपपरत्वसमर्थनम्। तत्तल्लोकेषु दृश्यमान भगवद्-रूपप्रकाशविशेषाः प्रतिपाद्यन्ते। आत्मान्तरात्मेति-रूपद्वयस्य स्वरूपस्थानादि विवरणम्।

## २२। आथर्वणोपनिषद्भाष्यम्

प्रथमतः ऋषीणामुत्पत्तिक्रमः। ऋगादिविद्यानां परापरत्वव्यवस्था। विष्णोः सर्वनामवाच्यत्वम्। युगादिभेदेन भगवदाराधनभेदः। अक्षरद्वयव्यवस्था। जीवेश्वरभेदानां साधनम्। ऐक्यपरतया प्रतीत-वचनानां सयुक्तिकं सरलीकरणम्।

## २३। माण्डूकोपनिषद्भाष्यम्

जाग्रत्स्वप्नसुषुप्तिमोक्षरूपावस्थाप्रेरक भगवद्रूपाणां नामाकारादि भेदविषये प्रमाणोक्तिः। प्रणवस्याकारा-दीनां केवल विष्णुरूपार्थवाचकत्वे प्रमाणोक्तिः। तेषां पृथगर्थविवरणम्।

## २४ । षट्प्रश्नोपनिषद्भाष्यम्

दम्पत्योर्मध्ये प्राणोभारतीच स्थित्वा प्रजोत्पादं कुरुत इत्यत्र प्रमाणोक्तिः । देवानां स्वरूप संख्योक्तिः । षोड़शकलानां निरूपणम् । विशेषाद्भेदसमर्थनम् ।

## २५ । तलवकारोपनिषद्भाष्यम्

भगवतः सर्वेन्द्रियप्रेरकत्व निरूपणम् । देवान्मोहयितुं यक्षरूपेण प्राप्तस्य भगवत्वसमर्थनम् । तत्वश्रवणविषये स्वस्वयोग्यगुरूक्तिः ।

एवं दशोपनिषदां भाष्येष्वपि आपाततः अभेदपरतया भगवद्गुणविरोधपरतयाच प्रतीयमान वाक्यानां सप्रमाणं पारमार्थिक भेदपरत्व व्यवस्थापूर्वकं सर्वात्मनाविष्णुसर्वोत्तमत्व परत्वं व्यवस्थापितम् । प्रसङ्गादन्येऽपिविषयाः समर्थिताः । अतिविरुद्धार्थवादिनां परवादिनामापातार्थाश्च खण्डिताः ।

## २६ । श्रीमद्भगवद्गीतातात्पर्यनिर्णयः

आदौ गीताभाष्ये गीतायाः पदानुकरणं पदार्थ विवरणञ्च कृतम् । एवं क्वचित्क्वचिद्दुर्बोधतयापि व्याख्यातम् । तात्पर्यनिर्णयेतु प्रायः गीतायाः पदानु-



करणं नास्ति । श्लोकानां तात्पर्यमात्रं विलिख्य तत्र बहूनि प्रमाणानि निर्दिष्टानि । परवादिदूषणञ्च प्रकारान्तरेण क्रियते । एकस्मिन्नेव भाष्ये सर्ववादिनामुपरि सर्वदूषणोक्तौ पाठकानां बुद्ध्यारोहो न भवतीति मत्वा ग्रन्थान्तरे कांश्चिद्दोषान् कथयन्ति । एवं गीतायाः प्रकारान्तरेणापिव्याख्याकृता । भाष्यादपि तात्पर्यनिर्णयो ललितः । भाष्ये यत्र संक्षेपः कृतस्तत्र तात्पर्ये विशेषव्याख्या कृता । यत्र विस्तरो भाष्ये तत्र तात्पर्ये तात्पर्यमात्रं लिख्यते । मुख्यविषयस्त्वेक एव । अवान्तरविषयास्तु भिन्ना एव । महाभारतस्य दशार्था वर्त्तन्ते तन्मध्ये द्वावर्थौ ग्रन्थद्वयेन सङ्कल्प्योक्तौ । श्रीः ।

## २७ । श्रीमन्न्यायविवरणम्

ब्रह्मसूत्रभाष्ये अनुव्याख्याने च विस्तरेणोपपादितानां पूर्वपक्षयुक्तीनां सिद्धान्तयुक्तीनाञ्च निष्कृष्य स्फुटं विवरणं क्रियते । प्रत्यधिकरणानां स्पष्ट तात्पर्य विवरणं संक्षेपतः क्रियते । रूढि महारूढि योगादयः शब्दवृत्तयः विशिष्यात्र प्रतिपादिताः ।

## २८ । नरसिंहनखस्तोत्रम्

त्रिविक्रमपण्डिताचार्यः कदाचिन्मध्वाचार्यस्य भग-

वत्पूजावेलायां बद्धकवाटविवरेण हनुमद्भीमसध्वाख्य रूपत्रयं प्रत्यक्षीकृत्य तत्रैव वायोरवताराणाञ्च स्तुतिरूपां वायुस्तुतिं विरच्य मध्वाचार्यस्य पूजासमाप्तौ समर्पयामास। तदा मध्वाचार्यः भगवत्स्तोत्ररहितामात्मस्तुति मात्रपूर्णां दृष्ट्वा स्वयं नरसिंहस्तोत्ररूपं श्लोकद्वयं विरच्य तस्यादौ लिलेख।

## २९। यमकभारतम्

अत्र तु भारतकथा एवं श्रीकृष्णकथाच संक्षेपतो निरूपिता। सर्वाण्यपि पद्यानि यमकपूर्णानि महा जटिलानि सानुप्रासालङ्काराणि माध्वकाव्येषु वा अन्यकाव्येषु वा एतादृशं कठिनकाव्यं नास्त्येव।

## ३०। द्वादशस्तोत्रम्

द्वादशाध्यायात्मकं ललितं श्रीविष्णुस्तोत्रम्। अत्र दशावताराणां केशवादि द्वादशमूर्त्तीनां माहात्म्यं ऐकान्तिकं भक्तिरसपूर्णं प्रत्यहं पठनार्हं दृश्यते। माध्वसम्प्रदायिषु प्रधानमिदं स्तोत्रम्।

## ३१। श्रीकृष्णामृतमहार्णवः

मध्वाचार्यकृतोपदेशामृतरूपोऽयं ग्रन्थः। अत्र विष्णुभक्तमाहात्म्यम्। वैष्णवसङ्गमाहात्म्यम्। हरिनामोच्चारणमाहात्म्यम्। ऊर्ध्वपुण्ड्रधारणमाहात्म्यम्। चक्रशङ्खादिधारणमाहात्म्यम्। एकादश्युपवासविधिः। विद्धैकादशीत्यागविधिः। विशेषतो नवलक्षणभक्तेरवश्यकर्त्तव्यता च प्रतिपादिताः।



## ३२। तन्त्रसारसंग्रहः

अत्र व्यासकृत तन्त्रसाराख्य ग्रन्थोक्तानां मन्त्राणां उद्धारः कृतः। भगवतः यावन्तिरूपाणि विद्यन्ते तावतां रूपाणां मूलमन्त्राः ध्यान षडङ्गन्यासाकारादि प्रतिपादनपूर्वकं विवृताः। प्रतिमार्च्चनविधिः। विग्रहप्रतिष्ठाविधिः। विग्रहाणां भङ्गे प्रायश्चित्तम्। देवालयनिर्म्माणक्रमः। विष्णुमन्त्राणां जपक्रमः। तर्पणक्रमः। होमक्रमः। कलश प्रतिष्ठाविधिः। मन्त्राणां सर्वपापरोगादिपरिहारकत्वरूप माहात्म्यकथनम्।

## ३३। सदाचारस्मृतिः

सूर्योदयात्पूर्वं ब्राह्मसमयमारभ्य पुनः परदिवसे ब्राह्ममुहूर्त्तपर्यन्तं ब्राह्मणानां चतुराश्रमिणां कर्त्तव्यानि कर्म्माणि विस्तरेणात्र प्रतिपादितानि एवं सन्ध्यावन्दनादिषु पठनीयवेदमन्त्राणां सूचनम्। ब्रह्मयज्ञवैश्वदेवादिविधिः। चतुराश्रमिणामाचारभेदाश्च।

## ३४ । श्रीमद्भागवततात्पर्यम्

इदं संक्षेपेण भागवतस्य व्याख्यानम् । आपाततया यत्र पूर्वोत्तरविरोधो द्रृश्यते तस्य सप्रमाणं परिहारः । अभेदपरतया प्रतीयमान वाक्यानां भेदपरत्वस्थापनम् । भागवतस्थानां कठिनशब्दानां युक्तार्थवर्णनपूर्वकं तत्र प्रमाणोक्तिः । भूतसृष्टिलयादिक्रमः । प्रायः अयं ग्रन्थः माध्वशास्त्र प्रमेयानां कोशरूपः ।

## ३५ । श्रीमन्महाभारततात्पर्यनिर्णयः

अत्र प्रथमतः जीवसृष्टिक्रमः । देवता तारतम्यं संक्षेपेण भगवदवताराणां स्वरूपनिर्णयः । सृष्टिस्थितिसंहारमोक्षदानक्रमः । विष्णोः सर्वोत्तमत्वे प्रमाणानि । देवेषु चतुर्मुखवाय्वोरुत्तमत्वम् । भारते भीमसेनस्य ज्ञानबलाभ्यां सर्वतोऽप्याधिक्य कथनम् । वायोर्महिमा महाभारते विरुद्धतया श्रूयमाणश्लोकानामुद्धारः । विरोधपरिहारक्रमः । विष्णोर्मत्स्यादि परशुरामान्तावताराणां संक्षेपतो वर्णणम् । श्रीरामावतारावतीर्ण कपीनां स्वरूपकथनम् । श्रीरामकथाविस्तरेण । व्यासावतारकारणकथनम् । व्यासावतारवर्णनम् । वेदविभागः । चन्द्रवंशवर्णनम् । यदुवंशवर्णनम् । पुरुवंशवर्णनम् । भीष्मोत्पत्तिकथा । धृतराष्ट्राद्युत्पत्तिकथा । कर्णोत्पत्तिः । पाण्डवावतारवर्णनम् । वसुदेवादिकथा । श्रीकृष्णबलरामावतारवर्णनं । महाभारतप्रधानपुरुषाणां विशेषरूपावेशादिकथनम् । नन्दगोकुले वृन्दावने च । श्रीकृष्णलीलावर्णनम् । दैत्यवधः । कंसवधः । यादवतोषणम् । जरासन्धयुद्धम् । पाण्डवकथा । द्रौपदीस्वयंवरकथा । इन्द्रप्रस्थराज्याधिकारः । द्वारकानिर्म्माणम् । रुक्मिण्यादिपरिणयकथा । विराटपर्वकथा । भारतयुद्धवर्णनम् । युधिष्ठिरराज्यप्राप्तिः । अश्वमेधयागः । यादवशापः । यादवनाशः । श्रीकृष्णलीलाविरामः । पाण्डवस्वर्गारोहणम् । बुद्धावतारकथा । कल्किरूपवर्णनम् । व्यासावतारवर्णनम् । एताः सर्वकथा अपि विस्तरेण प्रतिपादिताः ।



## ३६ । यतिप्रणवकल्पः

अत्र सन्यासस्वीकारक्रमः । मन्त्रोपदेशक्रमः । शिष्यशिक्षाक्रमः, यतीनां आचाराश्च । मन्त्रजपसंख्यानिर्णयः । अन्यमन्त्राणाञ्च जपक्रमः ।

## ३७ । जयन्तीनिर्णयः

भाद्रपदमासे श्रीकृष्णजन्माष्टमीदिवसनिर्णयः ।

तत्रावतारकाले कर्त्तव्यपूजाविधिः । प्रातरारभ्यकर्त्तव्याचारः । तेषु विशेषतः पठनीया मन्त्राः । श्रीकृष्णावतारसमये पूजनीयदेवताः । अर्घ्यदानमन्त्रः । चन्द्रपूजा । चन्द्रार्घ्यदानम् । स्वापविधिः । परदिने कर्त्तव्यक्रम । पारणक्रमः ।

## ३८ । श्रीकृष्णस्तुतिः

श्रीमध्वाचार्यः श्रीकृष्णप्रेरणया श्रीकृष्णप्रीतये सर्व शास्त्रार्थनिर्णयात्मकान् ग्रन्थान्विरच्यान्ते सर्वान् श्रीकृष्णाय समर्प्य श्रीकृष्णविचित्रगुणानुस्मरणपूर्वकं भक्त्यास्तौति ।

इति श्रीमन्मध्वाचार्यकृत सर्वमूलग्रन्थ
सारांशः समाप्तः ।

---

श्रीश्रीमन्मध्वाचार्यकृत-
सर्वमूलग्रन्थानां संक्षिप्त-

# सारांशवर्णनम्

द्वैतवेदान्तविदुषा वेदान्तवाचस्पतिना
पण्डितवर-श्रीअदमार-विट्ठलाचार्येण संगृहीतम्

श्रीमाध्वगौड़ीय-सम्प्रदायैकसंरक्षक-
परमहंस परिव्राजकाचार्य अष्टोत्तरशतश्री ॐ विष्णुपाद
**श्रीमद्भक्तिसिद्धान्तसरस्वतीगोस्वामि-**
महाराज-सम्पादितम्




कलिकाता-नगर्यां १म संख्यक उल्टाडिङ्गि जंसन रोडस्थित
**श्रीगौड़ीयमठतः**
सामयिकपत्र-गौड़ीय-सम्पादकेन बि, ए, इत्युपाधिक-
श्रीसुन्दरानन्द-विद्याविनोदेन प्रकाशितम्

प्रथम संस्करणम् ] [ भैक्ष्यमानकत्रयम्